यत्कर्तरीयंत्रम् ॥ खंडयतिखंडंकरोतिछि[illegible]छिनत्तीतियावत् ॥ १३ ॥ उपोपविश्यतस्यकर्तरीयंत्रस्यसमीपेउपविश्य ॥ क्वचिदुपसर्गस्यापिद्विर्वचनम ॥ तथाचश्रूयते ॥ प्रप्रपूज्यमहादेवं संसंयम्यमनःसदा उपोपहायसंसर्गंनिर्[illegible]र्निर्गतःसतापसइति ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ १०० ॥ १ ॥ देहंचेतिश्लोकद्वयंवाक्यम् ॥ पूर्वार्धमेवविवृणोति ॥ परमाणिवत्यर्धेन ॥ २ ॥ देहस्यलाघ[illegible]वाल्लघुत्वात्कर्तरीयंत्रमधःप्रविश्य ॥ किंकुर्वन् ॥ तद्यंत्रंतस्तस्माद्यंत्रात् ॥ बिभ्यद्भयंप्राप्नुवन् देहंवंचयन्तिरश्चीनोभूत्वातस्मात्प्रक्षयन् ॥ कथं

मनःपवनवेगेनभ्रममाणं[illegible]महारयम् ॥ अपिस्प्रष्टुंतमशकंयत्खंडयतिकोटिशः ॥ १३ ॥ उपोपविश्यपक्षींद्रस्तस्ययंत्रस्यनिर्भयः ॥ क्षणंविचारयामासकिमत्रकरवा[illegible]ण्यहो ॥ १४ ॥ स्प्रष्टुंनलभ्यतेचैतद्यात्यानप्रभवेदिह ॥ कउपायोत्रकर्तव्योवथाजातोममोद्यमः ॥ १५ ॥ नबलंप्रभवेदत्रनकिंचिदपिपौ[illegible]रुषम् ॥ अहोप्रयत्नोदेवानामेतत्पीयूषरक्षणे ॥ १६ ॥ यदिमेशंकरेभक्तिर्निर्द्दद्दातीवनिश्चला ॥ तदासदेवदेवोमांवियुनक्तुमहाधिया ॥ १[illegible]७ ॥ यद्यहंमातृभक्तोस्मिस्वामिनःशंकरादपि ॥ तदामेबुद्धिरत्रास्तुपीयूषहरणक्षमा ॥ १८ ॥ आत्मार्थंनोद्यमश्चायंदास्योवेत्तीतिविश्व[illegible]गः ॥ मातुर्दास्यविमोक्षाययतेहममृतंप्रति ॥ १९ ॥ जरितौपितरौयस्यबालापत्यश्चयःपुमान् ॥ साध्वीभार्याचतत्पुष्यैदोषोऽकृत्येपित[illegible]स्यन ॥ १०० ॥ इतिचिंतयतस्तस्यबुद्धिरासीन्महात्मनः ॥ १ ॥ देहंचकारसोत्यंतमणीयांसमणोरपि ॥ परमाणुसहस्रांशंकृत्वारूपंमहा[illegible]तम् ॥ २ ॥ प्रविश्यकर्तरीयंत्रमधोदेहस्यलाघवात् ॥ बिभ्यत्तद्यंत्रतोदेहंवंचयन्वायुखंडनात् ॥ ३ ॥ मूलमुत्पाट्यतरसागृहीत्वाऽमृतभा[illegible]नम् ॥ निर्ययौपावनेमार्गेक्रोशत्सुस्वर्गसद्मसु ॥ ४ ॥ तथावैकुंठनाथंवेगत्वाप्रोचुःसुधाभुजः ॥ निर्जित्यनीयतेचक्रिन्सुधानोजीवितंपरम[illegible]५ ॥ इत्याकर्ण्यहरिस्तेभ्योऽभयंदत्वात्वरायुतः ॥ कृत्वायुद्धंचसुमहद्विशार्कघटिकाद्वयम् ॥ ६ ॥

भूताद्यंत्रात् ॥ [illegible]खंडनाद्वायोरपिगतिविकल्यकर्तुरित्यर्थः ॥ ३ ॥ मूलमुत्पाट्ययस्मिंस्तदमृतभाजनंस्थापितंतदुत्पाट्यामृतभाजनंगृहीत्वास्वर्गसद्मसुदेवेषुक्रोशत्सुसत्सुअमृतंहरतीत्यार्तस्वरंकुर्व[illegible]सत्सुपावनेमार्गेआवहप्रवहादिवायुमार्गेनिर्ययाविति ॥ ४ ॥ ५ ॥ विशार्कघटिकाद्वयंविंशोविंशतिःअर्कोद्वादशविंशार्कौचताघटिकाश्वतासांद्वयंचतुःषष्टिदंडाः ॥ दंडचतुष्टया[illegible]होरात्रमित्यर्थः ॥ ६ ॥

तत्र विष्णुगरुडयोर्मध्ये ॥ ७ ॥ ८ ॥ ९ ॥ वृतंवृत मितिहर्षे द्विरुक्तिः ॥ ११० ॥ दत्तदत्तमित्यौत्सुक्ये ॥ ११ ॥ औत्सुक्येनरिपवेवरद्वयदानेस्वयमेवहेतुमाह ॥ अलब्धलाभइति

शुंभदेव्योर्यथासूतगरुडस्तत्रचाधिकः॥ तदाप्रसन्नोभगवान्महायुद्धेनसर्वदः॥७॥ गत्वागरुडमाहेदंप्रसन्नोस्मिखगेश्वर॥ वरंवृणीहिभद्रं तेजितवृंदारवंदक॥८॥ हसित्वागरुडःप्राहविश्वरूपंजनार्दनम्॥ अहमेवप्रसन्नोस्मित्वंप्रार्थयवरद्वयम्॥९॥ ततःकैटभजित्प्राहवैनतेयं मुदान्वितः॥वृतंवृतंमहोदारदेहिदेहिवरद्वयम्॥११०॥ इतिविष्णूदितंश्रुत्वाप्रहसन्नाहपक्षिराट्॥ किंविलंबेनतद्ब्रूहिदत्तंदत्तंवरद्वयम्॥११॥ अलब्धलाभेसंजातेद्यूतादिविजयोदये॥ दातव्यंसुधियापात्रेसदालाभजयौक्वा॥१२॥ ॥श्रीविष्णुरुवाच॥ ॥बलवानसिपक्षींद्रत न्मेवाहनतांव्रज॥ एकोवरोयंवरदद्वितीयंशृणुकाश्यप॥१३॥ दर्शयित्वामृतंप्राज्ञमातृदास्यविमोक्षकम्॥ द्विजिह्वेभ्यःकुरुतथाद्रागभ्रंति नतेयथा॥१४॥ यासुधासुधाभूभ्योद्वितीयोस्तुवरोमम॥ तथेतिसप्रतिज्ञायनिर्ययौपक्षिराड्दिवः॥१५॥ समातरंविनिर्मोच्यदास्या त्काश्यपनंदनः॥ नागानांपुरतोधृत्वामहामृतकमंडलुम्॥१६॥ अमृतंपातुकामांस्तानित्याचष्टमहामतिः॥ नागाःशुचित्वमासाद्यभोक्त व्यैषासुधाशुभा॥१७॥ नोचेदशुचिभिःस्पृष्टास्नानादिपरिवर्जितैः॥ यास्यत्यदृश्यतामेषासुधाऽनिमिषरक्षिता॥१८॥ सामान्यमपियद्द्र व्यंस्पृश्यतेऽशुचिभिःक्वचित्॥ हरंतितद्रसंदेवास्तच्चतिष्ठतिनीरसम्॥१९॥ इत्युक्त्वासहितोमात्रावैनतेयोविनिर्ययौ॥ कुशासनेचतैरुक्तोधृ त्वापीयूषभाजनम्॥१२०॥ यावत्स्नातुंगताःसर्पास्तावत्पीयूषभाजनम्॥ आदायविष्णुनादत्तंदेवेभ्यइवजीवितम्॥२१॥ आगत्यभुज गाःस्नात्वानदृष्ट्वामृतभाजनम्॥ अहोप्रतारितानीतममृतंचेतिचुक्रुशुः॥२२॥ ततःपर्यलिहन्दर्भान्पीयूषस्पर्शकांक्षिणः॥ आस्तांताव त्सुधादूरंजिह्वास्तेषांद्विधाभवन्॥२३॥

॥ १२ ॥ द्वयंप्रार्थयति ॥ बलवानितिसार्धद्वाभ्याम् ॥ १३ ॥ द्विजिह्वेभ्यइतिभाविस्व[illegible]जानताभगवतोक्तम् ॥ द्राक्झटिति ॥ १४ ॥ दिवःस्वर्गात् ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥
॥ १९ ॥ १२० ॥ इवशब्दोभिन्नक्रमेदेवेभ्योऽर्थात्तेषांजीवितमितिवेति ॥ २१ ॥ २२ ॥ २३ ॥

उक्तन्यायमन्यत्राप्यतिदिशति ॥ अन्ये का इति ॥ बुभुक्षंतिभोक्तुमिच्छंति ॥ अन्यायलब्धान्नमितिवापाठः ॥ परिणतिंपरिपाकम् ॥ २४ ॥ २५ ॥ एवमुपोद्घातमारचय्यप्रस्तुतंवक्तु

अन्येप्यन्यायलब्धार्थंयेबुभु दिरं गं भुक्षंतिकेवलम् ॥ तन्नोपरिणतिंगच्छेद्भोक्तुंवातैर्नलभ्यते ॥ २४ ॥ न्यायाध्वस्थेनताक्ष्र्येणसुधाप्रामातिदुर्लभा ॥ लब्धाप्यन्यायतोनागैर्दृष्टमात्राक्षणाद्धृता ॥ २५ ॥ अथदास्याद्विनिर्मुक्ताविनतोवाचखेचरम् ॥ पुत्रकाशींप्रयास्यामिदास्यपापापनुत्तये ॥ २६ ॥ तावत्पापानिजृंभं तेनानाजन्मार्जितान्यपि ॥ यावत्काशीनदृत्संस्थापुनर्भवविघातिनी ॥ २७ ॥ काशीस्मरणमात्रेणकिंचित्रंयदघंव्रजेत् ॥ गर्भवासोपिन श्येतविश्वेशानुग्रहादरात् ॥ २८ ॥ यत्रविश्वेश्वरःसाक्षात्तारापतिविभूषणः ॥ तारयेत्तारकद्रोण्यादुस्तराद्भवसागरात् ॥ २९ ॥ विश्वेशानुगृहीतानांविच्छिन्नाखिलकर्मणाम् ॥ भवेत्काशींप्रतिमतिर्नेतरेषांकदाचन ॥ १३० ॥ काशींप्रतिमनोयेषांनिःशेषक्षालितैनसाम् ॥ तए विमानवालोकेसत्यंनृपशवोपरे ॥ ३१ ॥ तैरेवकालोविजितस्तएवहिगतैनसः ॥ अपुनर्गर्भवासास्तेप्रामावाराणसीहयैः ॥ ३२ ॥ श्रेयसां भाजनंचैतन्नृजन्मनमुधानयेत् ॥ देवानामपिदुष्प्राप्यंकाशीसंदर्शनादृते ॥ ३३ ॥ कःकलिःकोथवाकालःकिंवाकर्माण्यनेकधा ॥ परानं दप्रदंक्षेत्रमविमुक्तंयदीक्षितम् ॥ ३४ ॥ तेगर्भवासेतिष्ठंतिपुनस्तेगर्भवासिनः ॥ येनगर्भवनच्छेत्रींसेवंतेवरणामसिम् ॥ ३५ ॥ निशम्येति वचःप्राहताक्ष्र्योनत्वाथमातरम् ॥ अहमप्यागमिष्यामिकाशींद्रष्टुंशिवार्चिताम् ॥ ३६ ॥ मातुराज्ञामथप्राप्यजनन्यासहपक्षिराट् ॥ क्षणाद्वाराणसींप्रापमोक्षनिक्षेपभूमिकाम् ॥ ३७ ॥ उभावपिचतेपातेतपउग्रंमहामती ॥ संस्थाप्यशांभवंलिंगंपतत्रींद्रोऽचलेंद्रियः ॥ ३८ ॥ नाम्नाखखोल्कमादित्यंसंस्थाप्यविनताशुभम् ॥ अचिरेणैवकालेनमहतस्तपसस्तयोः ॥ ३९ ॥ काश्यांप्रसन्नौसंजातौदेवौशंकरभास्करौ ॥ गरुडस्यापितालिंगादाविरासीदुमापतिः ॥ १४० ॥

माह ॥ अथेत्यत आरभ्यउभावपीत्यतःप्राक्तनेनग्रंथेन ॥ २६ ॥ २७ ॥ २८ ॥ तारापतिविभूषणश्चंद्रलांछनः ॥ तारकद्रोण्यातारकःप्रणवःषडक्षररामंत्रराजोवासएवद्रोणीनौकाविशेषस्तयेत्यर्थः ॥ द्रोणीकाष्ठांबुवाहिनीत्यमरः ॥ २९ ॥ १३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ गर्भएववनंतच्छेत्रीम् ॥ गर्भवासच्छेत्रीमितिपाठेछंदोभंगआर्षः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ १४० ॥

॥ ४१ ॥ ४२ ॥ ४३ ॥ भेददृक्भेदज्ञानम ॥ चकारएवार्थे ॥ मास्त्वेवेत्यर्थः ॥ नौआवयोः ॥ ४४ ॥ पततिगच्छतीतिपत्रंयानम् ॥ सत्पत्रतांसद्वाहानतामित्यर्थः ॥ ४५ ॥ ४६ ॥

गरुडायवरान्प्रादात्सुबहूनतिदुर्लभान् ॥ खगेंद्रममभक्तोसितवज्ञानंभविष्यति ॥ ४१ ॥ वेत्स्यसित्वंरहस्यंमेयन्नज्ञातंसुरैरपि ॥ त्वयैत त्स्थापितंलिंगंगरुडेश्वरसंज्ञितम् ॥ ४२ ॥ परमज्ञानदंपुंसांदृष्टंस्पृष्टंसमर्चितम् ॥ अन्यच्चशृणुपक्षींद्रहितंतेवच्मिसांप्रतम् ॥ ४३ ॥ असाव हंसवैविष्णुर्मास्तुतेभेददृक्क्वचनौ ॥ एवंतस्यैवपक्षींद्रदैत्येंद्रबलहारिणः ॥ ४४ ॥ प्राप्यसत्पत्रतांपत्रिंस्त्वमप्यर्च्योभविष्यसि ॥ इतिदत्वावरंशं भुःस्वभक्तायगरुत्मते ॥ ४५ ॥ तत्रैवांतर्हितोजातोगरुडोपिहरिंययौ ॥ हरेरथत्वंसंप्राप्यसोपिपूज्योऽभवद्भुवि ॥ ४६ ॥ तपस्यंतीमथालोक्य कदाचिद्विनतांप्रभुः ॥ शिवस्यैवपरामूर्तिःखखोल्कोनामभास्करः ॥ ४७ ॥ दत्वावरंचपापघ्नंशिवज्ञानसमन्वितम् ॥ काशीवासिजनाने कभवपापक्षयंकरः ॥ ४८ ॥ विनतादित्यइत्याख्यःखखोल्कस्तत्रसंस्थितः ॥ इत्थंखखोल्कआदित्यःकाशीविघ्नतमोहरः ॥ ४९ ॥ तस्यदर्शन मात्रेणसर्वपापैःप्रमुच्यते ॥ काश्यांपैशंगिलेतीर्थेखखोल्कस्यविलोकनात् ॥ नरश्चिंतितमाप्नोतिनीरोगोजायतेक्षणात् ॥ १५० ॥ नरःश्रु त्वैतदाख्यानंखखोल्कादित्यसंभवम् ॥ गरुडेशेनसहितंसर्वपापैःप्रमुच्यते ॥ १५१ ॥ ॥ इतिश्रीस्कंदपुराणेकाशीखण्डेखखोल्कादित्यग रुडेशयोर्वर्णनंनामपंचाशत्तमोऽध्यायः ॥ ५० ॥ इतिकाशीखंडपूर्वार्धसमाप्तम् ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

॥ ४७ ॥ ४८ ॥ ४९ ॥ पैशंगिलेपिलिपिलातीर्थे ॥ १५० ॥ १५१ ॥ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यभगवत्पूज्यपादशिष्यश्रीरामेंद्रवनशिष्येणरामानंदेनकृतायांका

॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥